

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासपत्रिका

जुलै २०१९ रू.५/-

श्रीस्वामिनः
आणिवरास्थानमहोत्सवः
तिरुमल
१७-०७-२०१९






परिणयवेदिका



नूतनवध्वौ (श्रीदेवी, भूदेवी)

तिरुमलायां
१३-०५-२०१९ तः
१५-०५-२०१९ पर्यन्तं समाचरितः
श्रीपद्मावती श्रीनिवासयोः
परिणयमहोत्सवः



श्रीस्वामिने पुष्पमालाः समर्पयन् ति.ति.दे.कार्यनिर्वहणाधिकारी

नूतनवरः (श्रीस्वामी)



गरुडवाहनोपरि श्रीस्वामी



अश्ववाहनोपरि श्रीस्वामी

# गीतामृतम्



सत्वानुरूपा सर्वस्य श्रद्धा भवति भारत।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः।।

हे भारत! सर्वेषां मनुष्याणां श्रद्धा तेषाम् अन्तःकरणानुरूपं वर्तते। अयं पुरुषः श्रद्धामयः अस्ति, अत एव यः यत् श्रद्धायुक्तः सः स्वयमपि स एव।

(भगवद्गीता १७/३)



# सङ्कीर्तनम्

वेङ्कटाचलनिलयं वैकुण्ठपुरवासम्
पङ्कजनेत्रं - परमपवित्रम्
शङ्खचक्रधरचिन्मयरूपम्

अम्बुजभवविनुतम् अगणितगुणनामम्
तुम्बुरुनारदगानविनोदम्
अम्बुधिशयनम् आत्माभिरामम् ।।

पाहि पाण्डवपालं कौरवमदहरणम्
बाहुपराक्रमफणिपतिशयनम्
अहल्याशापविमोचनचरणम् ।।

सकलवेदविचारं सर्वजीविनेतारम्
मकरकुण्डलधरमदनगोपालम्
भक्तविपोषकपुरन्दरविठलम्।।

(श्री पुरन्दरदाससंस्कृतसङ्कीर्तनानि)

*एतत् पुरन्दरदासवर्याणां संस्कृतसङ्कीर्तनम्।*
*ते महाभागाः ''कर्नाटकसङ्गीतपितामहाः''*
*इति प्रसिद्धाः।*
*एते तिरुमलक्षेत्रस्य श्रीनिवासस्य अनन्यभक्ताः। एतत् सङ्कीर्तनं*
*तिरुमलक्षेत्रे अगायन्।*

सम्पादकीयम्

# गुरुस्साक्षात् परब्रह्म

*गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।*
*गुरुस्साक्षात् परब्रह्म तस्मै श्रीगुरवे नमः।।*

त्रिमूर्तिस्वरूपः गुरुः। भगवन्तं गुरुं च वयम् अभिन्नतया एव पश्यामः। हैन्दवसंस्कृतौ गुरोः स्थानं परमोत्कृष्टम् अत्यन्तपवित्रञ्च। लौकिक-पारलौकिकविद्यायाः च कृते गुरोः आवश्यकतायाः विषये वर्णनं कर्तुं न शक्नुमः। अत एव उच्यते ''अगुरोरधीता विद्या अन्धविद्या'' इति।

लौकिकपरिज्ञानेन पश्यामश्चेत् अक्षरलेखयिता गुरुः। मनुष्येभ्यः भगवत्सान्निध्यप्राप्तये मार्गबोधकः एव गुरुः। जीवनमित्युक्ते दृश्यमानं न, अपि तु भाषा-स्पर्श-दृश्यातीतं ब्रह्मसायुज्यार्थं प्रयत्नमेव। तदर्थम् अग्रे गमयिता एव गुरुः।

गुरोः चयने शिष्यस्य प्रतिभा व्यक्तीभवति। मार्गवत् गुरुः भवति। लक्ष्यप्राप्तये चयितः मार्गः सुगमः भवेत् तर्हि एव सुरक्षिततया लक्ष्यं प्राप्नुमः। नो चेत् सर्वमपि अगम्यगोचरो भवति। अत एव गुरोः उपरि शिष्यस्य, शिष्योरुपरि गुरोः अव्याजानुरागेभ्यः साकं, गौरवाभिमानान्यपि भवेयुः।

त्रिकरणशुद्ध्या ज्ञानार्थी गुरोः शुश्रूषां करोतु। दृढविश्वासेन गुरोः सेवा करणीया। तदा एव सः सर्वाः विद्याः बोधयति। अज्ञानान्धकारनिवारणं करोति। योग्यगुरुः स्वस्य वचनमाध्यमम् अपेक्षया अनुभवज्ञानेन एव अधिकं बोधयति, भौतिकरूपेण यदा अस्मत्समीपे न विद्यते तदा अपि सः सम्पृक्तः एव तिष्ठति। स्वस्य उपदेशैः एव सः जीवति, तदीयं जीवनं निरन्तरं प्रेरणादायकं भवति। कोऽपि योग्यः गुरुः त्वयि अत्महीनभावं न जनयति। सः दृढं विश्वसिति यत् ''अहं त्वं च आत्मनः स्तरे समानौ'' इति। परिष्कर्तव्याः अंशाः व्यक्तिगतरूपेणैव गुरुणा सूच्यन्ते; न कदापि अन्यस्य दोषदर्शनं गणे क्रियते।

ज्ञानपिपासोः कृते परमार्थज्ञानाय अवश्यमेव एकः गुरुः आवश्यकः। अवश्यमेव तादृशानामन्वेषणम् अविश्रान्ततया कुर्युः। एवं रूपी अन्वेषणरतस्य शिष्यस्य कृते गुरुरूपेण साक्षात् भगवानेव आयाति। एवं रूपी गुरोः महिमां ज्ञात्वा, सद्गुरुमाश्रयित्वा आराधयामः। स एव साक्षात्परब्रह्मस्वरूपिणे गुरवे समर्प्यमाणः पुष्पाञ्जलिः।



व्यासो नारायणो हरिः।



*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०६ सञ्चिका-०४

## जुलै - २०१९

श्रीविकारीनामसंवत्सरस्य ज्येष्ठकृष्णचतुर्दशी तः
आषाढकृष्णचतुर्दशी पर्यन्तम् - १९४१





**गौरवसम्पादकः-**
श्री अनिलकुमार सिङ्घाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

**प्रकाशकः - प्रधानसम्पादकः**
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

**सम्पादकः -** डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

**मुद्रापकः -** श्री आर्. वि. विजयकुमारः B.A. B.Ed.,
उपकार्यनिर्वहणाधिकारिणी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

**वर्णचित्रविन्यासकः -** श्री पि.शिवप्रसादः, ति.ति.दे.,
विश्रान्तचित्रकारः

**छायाचित्रग्रहणम् -** श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्केटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

**मुखचित्रम् –** श्रीस्वामिनः आणिवरास्थानमहोत्सवः, तिरुमल
**अन्तिमरक्षापुटः –** श्री विखनसाचार्यः, तिरुपतिः


**सूचना**
मुद्रितलेखानां विचाराः लेखकानामेव ।
एतद्विषये अस्माकं दायित्वं नास्ति।
*– प्रधानसंपादकः*


## सङ्केतः
प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,

दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,

सूचनानाम्, आक्षेपाणां च कृते

sapthagiri_helpdesk@tirumala.org


एका पत्रिका : रू.५/-



# वैदिकधर्मस्य सामाजिकश्रेयस्साधनता

- श्री प्रवारामकृष्णसोमयाजी

यस्य निश्श्वसितं वेदाः, यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्।।

सुविदितमेवैतदाबालगोपालं हृदये प्रचलत्येष भावः यत् सुखं मे स्यात् दुःखं मे न मनाग् इति। सर्वस्मिन्नपि काले सकलोऽपि प्रपञ्चः अत्रैव यतते, ज्ञात्वा वा उत अज्ञात्वा वा सुखप्राप्तौ दुःखनिवृत्तौ च।

तत्र चक्षुरादिभिरवगम्यमानाः सन्त्येव बहव उपायाः। ते तु लौकिकाः परिमितफलाश्च। यस्तु लोके इन्द्रियार्थसन्निकर्षादिना अग्राह्यः तन्मूलकव्याप्तिज्ञानेन सुतरामनधिगम्यः अलौकिकोपायः सः वेदैकागम्यः। स च ध्रियते जगदनेन इति, धरति जगदिति वा व्युत्पत्या धर्मशब्देनाभिधीयते 'धर्मो विश्वस्य जगतः प्रतिष्ठा' इति श्रुतिः। धृञ् धारणे इति धातोः १.१४० अर्ति स्तु, सु. इत्यादिना औणादिकसूत्रेण मन् प्रत्यये धर्मशब्दनिष्पत्तिः, इति धर्मस्य तस्य मूलं वेदः। अत एव भगवता जैमिनिना सूत्रितं **'चोदना लक्षणोर्थो धर्मः'**। अत एव 'इष्टप्राप्त्यनिष्टपरिहारयोः अलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः' इति वेदलक्षणमुक्तं श्रीमद्विद्यारण्यपादैः वेदभाष्योपोद्घाते। 'वेदबोधितश्रेयस्साधनताकः धर्मः' धर्मलक्षणं च मीमांसायाम्। अयं च वेदः 'स्वाध्यायोऽध्येतव्य' (तै.आ.२.१४) इत्यध्ययनविधिसिद्धः। स्वाध्यायो नाम स्वपितृपितामहादि परम्पराप्राप्ता वेदशाखा।

तदध्ययनञ्चार्थज्ञानसहितम्। विधेः बोधपर्यवसायित्वादिति भाष्यम्। मीमांसायामपि अर्थवादाधिकरणे वाक्यमिदं निरूपयद्भिः खण्डदेवाचार्यैः एवमुक्तं 'प्रयोजनवदर्थज्ञानोद्देशेन स्वाध्यायाध्ययनं विधीयते' प्रयोजनवदर्थज्ञानसाधनीभूतस्वाध्यायोद्देशेन वा अध्ययनसूत्रमिति ( तत्र तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वाभिधानं द्वितीयवर्णकपर्यन्तं गमने हेतुः) तच्चार्थज्ञानं शिक्षादिषडङ्गानाम् इतिहासपुराणसाहाय्येन सम्यक् सम्पादनीयम्। एतावता इदमुक्तं भवति पुराणाभिलषितं श्रेयः, तत्र आलौकिकोपायः धर्मः तत्र प्रमाणं वेदः स चाध्ययन-विधिसिद्धः। तदध्ययनञ्चार्थज्ञानसहितमिति अनेन धर्मेणानुष्ठीयमानेन जगद्ध्रियते रक्ष्यते। अत एव 'धर्मो रक्षति रक्षितः' इत्यत्रानुष्ठानमेव धर्मस्य रक्षणम्, अतः रक्षितः अनुष्ठितः, धर्मः इष्टप्राप्त्यनिष्टपरिहारद्वारा, रक्षति पालयति, इति विद्वद्भिः व्याख्यायते। यतः धर्मः रक्षति अतः तदनुष्ठानं शश्वत्प्रवर्ततामिति श्रुतिरपि आशास्ते। तत्फलमपि न लौकिकोपायजन्यमिव न सकृत्, न वा परिमितं किन्तु दीर्घकालिकमपरिमितञ्चेति बोधयति कस्मिंश्चिन्मन्त्रे। तैत्तिरीयशाखायां (ब्र.प्र.अध्या.१.५.५) अच्छिद्रकाण्डे स मन्त्रः एवमाम्नातः 'शश्वतीः समा उपयन्ति लोकाः। शश्वतीः समा उपयन्त्यापः। इष्टं पूर्तगँ शश्वतीनाँग् समानाँग् शाश्वतेन। हविषेष्ट्वानन्तं लोकं परमारुरोह' इति। अत्र विद्यारण्यभाष्यम् - लोकाः सर्वे प्राणिनः शश्वतीः -शाश्वतीः, समाः - निरन्तरवर्तिनः संवत्सरान्, उपयन्ति-प्राप्नुवन्ति। एकस्मिन्संवत्सरे अतीतेऽपि पुनरन्यं संवत्सरं प्राप्नुवन्ति। तथैव आपः, शश्वतीः, समाः, उपयन्ति-निरन्तरं प्रवहन्ति। यथा एतावुभौ दृष्टान्तौ, तथा शश्वतीनां समानां-निरन्तरवर्तिनां सम्बन्धि इष्टं पूर्तं-श्रौतं स्मार्तं च कर्म प्रवर्ततां कर्मानुष्ठानमविच्छिन्नमस्तु इत्यर्थः। तेन शाश्वतेन - निरन्तरानुष्ठितेन, हविषा, देवम् इष्ट्वा, अनन्तं-विनाशरहितं, परम-उत्कृष्टं, लोकम् अरुरोह पुरुषः आरोहति - कृष्यादिफलवत् श्रौतस्मार्तकर्मफलं सहसा न विनश्यति किन्तु

चिरमनुभवितव्यमित्यर्थः। इष्टापूर्तशब्दाभिधेयं श्रौतं स्मार्तं च कर्म अन्यत्र एवमवगम्यते।

**अग्निहोत्रं तपस्सत्यं वेदानां चानुपालनम्।**
**आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते।।**
**वापीकूपतटागादिदेवतायतनानि च।**
**अन्नप्रदानमारामः पूर्तमित्यभिधीयते।।**
**यं यं कामयते कामं तं तं वेदेन साधयेत्।**
**असाध्यं नास्ति यत्किञ्चित् ब्रह्मणो हि फलं महत्।।** इति।

अग्निहोत्रफलाः वेदाः इत्यादीनि च बहूनि प्रमाणानि पूर्वोक्त - विषयस्योपपादकानि दृश्यन्ते। अत्र अयं विशेषः - अनुष्ठितः धर्मः अनुष्ठातुः सर्वार्थसाधक इति एतावदेव न, परन्तु सकलस्यापि जगतः सुखहेतुः। तथा च आरुणकेतुकप्रकरणे एवं श्रूयते।

**यदक्षरं भूतकृतं विश्वे देवा उपासते।**
**महर्षिमस्य गोप्तारं जमदग्निमकुर्वत।।**

जमदग्निराप्यायते, छन्दोभिश्चतुरुत्तरैः। राज्ञः सोमस्य तृप्तासः ब्रह्मणा वीर्यवता। 'शिवा नः प्रदिशो दिशः... ' इति अयं भावः अध्ययनाध्यापनादिसम्प्रदायप्रवर्तनया वैदिकमार्गपरिपालकः जमदग्निप्रभृतिकः ऋषिसङ्घः दैवैर्नियुक्तः वर्तते। स च जमदग्न्यादिऋषिसङ्घः अधिकारिणां कृते वेदोपदेशेन 'सर्वान् प्राणिनः' आप्यायति तोषयति। अधीतवेदाः यजमानाश्च सामर्थ्ययुक्तेन मन्त्रेण सोमयागादिकमनुष्ठाय हविश्शेषभूतस्य हुतशिष्टस्य सोमस्य पानेन कृतकृत्यत्वबुद्ध्या तृप्ता भवन्ति। तदीया तृप्तिः व्यज्यते 'शिवाः नः प्रदिशः दिशः' इति प्राच्याद्याः प्रकृष्टाः दिशः, अग्नेय्याद्याः विदिशश्च, नः अस्माकं, शिवाः शान्ताः, सर्वदिग्वर्तिप्रजासुखहेतवः सम्पन्ना इति। अनेन इदमवगम्यते अधिकार एकः कश्चित् वैदिकधर्मानुष्ठानेन सकलस्य जगतः सुखं सम्पादयति। क्रतु-प्रकरणेऽपि श्रूयते 'कल्पते ह वै तत्र प्रजाभ्यो योगक्षेमः। यत्रैतेन यज्ञेन यजन्ते।' इति यज्ञयागादि धर्मानुष्ठानमन्नसम्पत्तिद्वारा प्रजासुखहेतुरिति मनुनापि स्मर्यते-

**अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।**
**आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः।।** इति।

इदमुपोद्बलयति कश्चिन्मन्त्रः आरुणकेतुकप्रकरणे 'इत सिक्तगँ सूर्यगतम्' इत्यादि। याज्ञिकी उपनिषदपि एवमुपदिशति 'याभिरादित्यस्तपति' इत्यारभ्य।

किमन्नमात्रसम्पत्त्या सुखसिद्धिः इति शङ्का श्रुत्यैव परिह्रियते 'अन्नात्प्राणा भवन्ति, भूतानां .... इत्यादिना आनन्दावाप्तिपर्यन्तं परम्परया अस्य प्रयोजकत्वप्रतिपादनेन। अयं भावः यथोक्तवैदिकधर्मानुष्ठानेन क्रमशः वृष्ट्यादिना जगति सस्यसमृद्धिः अन्नसम्पत्तिः, सकल पुरुषार्थसिद्धिश्च इति मोक्षपर्यन्तमपि परम्परया अस्य धर्मस्य प्रभावः। एवं बहुत्र प्रतिपादितः। अच्छिद्रकाण्डे च कश्चिन्मन्त्रः यज्ञः सर्वार्थसाधकः इति प्रतिपादयति। यज्ञो रायो यज्ञ ईशे वसूनाम्। यज्ञः सस्यानामुत सुक्षितीनां। यज्ञ इष्टः पूर्वचित्तिं दधातु। यज्ञो ब्रह्मण्वागं अप्येतु देवान्' इति। यज्ञः, यागः, धर्मः इत्यनर्थान्तरम्।

अत एव तादृशधर्मस्य अननुष्ठाने ऋषिमुखेन निन्दत्यपि श्रुतिः औपानुवाक्यकाण्डे दाक्षिणहोमे कश्चिन्मन्त्रः - 'यज्ञपतिमृषय एनमाहुः। मधव्यौ स्तोकौ अप तौ रराध तौ संन्नस्ताभ्याँग् सृजतु विश्वकर्मा' इति। अयं भावः 'वसन्ते वसन्ते ज्योतिषा यजेत' इति विधिमनुसृत्य चैत्रवैशाखमासात्मकः वसन्तर्तुः ज्योतिष्टोमानुष्ठानेन स्तोतुं योग्यः। तत्र केनापि आलस्यादिना ज्योतिष्टोममननुष्ठाय, असौ अधिकारी अपराद्धवान्। ततः प्रजाः वृष्ट्याद्यभावेन अन्नाद्यलाभे क्षुत्पिपासाभ्याम् अप्यन्तं तापमनुभवन्त्यः वर्तन्ते। तदा ऋषयः यजमानं स्वधर्मानुष्ठानविमुखं धिगयं पापी इति निन्दन्ति। दैवानुग्रहेण अस्माकं यजमानानां सम्यगनुष्ठानसम्पत्या तादृशी स्थितिः निन्दप्राप्तिः मा भूदिति।

अत्र मन्त्रे वैदिकधर्मानुष्ठानत्यागे सर्वेषां प्राणिनां क्लेशः उक्तः। अत एव भगवत्पादाचार्या अपि, वेदो नित्यमधीयतां तदुदितं कर्मस्वनुष्ठीयतामित्युद्बोधितवन्तः। अतः इष्टप्राप्त्यनिष्टपरिहारयोः अलौकिकोपायः धर्मः। स च यागादिरूपः, वेदैकगम्यश्च। स धर्मः षड्भिरङ्गैरितिहासपुराणकृतोपबृंहणेन प्रमितव्यः स चाधिकारिणा अनुष्ठितस्सन् सकलस्य जगतः योगक्षेमदानेन परिपालकः इति पूर्वोक्तं सर्वं सुसम्पन्नम्। प्रजापतिवचनेनापि भगवता इदमेवोपदिष्टम्।

**देवान् भावयतानेन ते देवा भावयन्तु वः।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ।।** इति।

यथोक्तवैदिकधर्म एव यज्ञपुरुषः श्रीमहाविष्णुः परमात्मा इति याज्ञिकानां विश्वासः। तादृशो धर्मरूपः परमात्मा अस्मान् सर्वानपि धर्मबुद्धिप्रदानेन धर्ममनुष्ठाप्य सकलस्य समाजस्य श्रेयोदानेन पालयतु। योगक्षेमो नः कल्पताम्।





# गुरुदेवो भव

- डा. सि. आदिलक्ष्मीः

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥

अज्ञानान्धकारे निमग्नं मानवं ज्ञानदीपेन प्रज्वालितं गुरुं नमामि। पूर्वकाले विद्याभ्यसनाय गुरुकुलं गत्वा गुरुशुश्रूषया विद्या प्राप्यते स्म। गुरुसेवया प्राप्ता विद्यैव 'उत्तमविद्या' इति शास्त्रवचनम्। सद्विद्या पुस्तकेषु न लभ्यते अपि तु सत्सङ्गात् प्राप्तं भवति। पुस्तकानां माध्यमेन या विद्या प्राप्यते तत्केवलं उदरपूरणार्थमेव भवति न तु मोक्षोपयोगी! नरं नरोत्तमेण इतोपि नारायणत्वेन निर्माणार्थं सद्विद्यायाः आवश्यकता अस्ति। तादृशी सद्विद्या गुरुसेवया, सज्जनैः सहवासेन लभ्यते। 'तपः स्वाध्यायनिरतं' इति प्रथमश्लोके बालरामायणे लिखितमस्ति। अत्र विद्या तपः सदृशेति भावः। अत एव पूर्वकाले वशिष्ठादि ऋषयः प्राकृतिकवातावरणे शिष्योपदेशं कुर्वन्तः आसन्। पूर्वकाले विद्यां 'तपोबलमिति' भावयित्वा एकाग्रतया सम्यक् श्रवणशक्त्या शिष्याः शिक्षिताः। अत एव वेदाः 'श्रुतयः' इति नाम्ना प्रकीर्तिताः। श्रवणद्वारैव वेदाः प्रचारं गताः।

श्रीमद्रामायणे श्रीरामः विश्वामित्रमभिगम्य वने उषित्वा गुरुशुश्रूषया राक्षससंहारव्याजेन विद्यामधीतवान्। श्रीरामः साक्षात् नारायणस्वरूपः परन्तु विश्वामित्रसविधे शिष्यवदेव अवर्तत। आधुनिककाले केवलं व्यापाररूपेण विद्या परिणामं प्राप्य आत्मज्ञानविहीनो भूत्वा मानवः उत्तमजीवनं न यापयन्नस्ति। श्रीकृष्णः जगद्गुरुः। समस्त भूमण्डलम् उद्धर्तुं गीतोपदेशं दत्तवान्! जगद्गुरुः सः अस्मान् पालितवान्। श्रीकृष्णः तादृशारीत्या गोसेवां, अश्वसेवां कृतवान्। अतः श्रीकृष्णः 'अमानी' इति नाम्ना ख्यातिं प्राप्तवान्। अभिमानं जीवस्य लक्षणं भवति। निरभिमानं भगवतः लक्षणं भवति। अतः बंकिंचन्द्रः स्वपुस्तके कृष्णचरिते श्रीकृष्णं ''किंग् न किंग् मेकर्'' अर्थात् राजा न राजनिर्मातेति। भारतीयसंस्कृतौ आचार्यस्य महिमा सम्यग् वर्णितमस्ति। अस्माकं जीवने यावन्तः सम्बन्धिनः सन्ति तेषु आचार्यस्य सम्बन्धः श्रेष्ठतमः उच्यते। आचार्यः नाम गुरुः। आचार्यः अस्मभ्यं विद्यां ददाति। अस्मान् सन्मार्गं नयति, अस्माकं जीवनं सार्थकं च करोति। एतदर्थम् उपनिषत्सु एतद् वचनम् एवम् उक्तं यत् ''आचार्य देवो भव!'' अर्थात् आचार्यः साक्षात् देवः अस्ति। आचार्यः सर्वदा देवरूपेण पूजनीयो भवति। सर्वेषु हिन्दूधर्मग्रन्थेषु आचार्यस्य पूजाविधानं सम्यग् उक्तम्। आचार्यस्य स्थानं मातुः पितुश्चापि अधिकं महत्वपूर्णम् अस्ति। अस्माकं पितरः केवलं जन्महेतवः भवन्ति। किन्तु आचार्येण मनुष्यो मनुष्यः भवितुमर्हति। आचार्यः विद्यादानेन शिष्याणां पाशविकीं प्रवृत्तिं दूरीकरोति। वस्तुतः ज्ञानादेव मनुष्याः कथ्यन्ते। अन्यथा विद्याविहीनाः नराः साक्षात् पुच्छविषाणहीनैः पशुभिः समाना। अतः येन

आचार्येण मनुष्याः ज्ञानिनः भवन्ति सः आचार्यः सर्वदा सर्वैः आदर्त्तव्यः। गुरोः प्रसादादेव शिष्याः विद्यां लभन्ते। श्रीमद्भगवद्गीतायां भगवता श्रीकृष्णेन आचार्यस्य महत्वं सम्यग् वर्णितम् अस्ति। अस्मिन् विषये भगवान् श्रीकृष्णः आह -

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः।।**

उपर्युक्तश्लोकस्य अयमाशयः तत्वदर्शिनः ज्ञानिनः आचार्याः प्रणिपातेन परिप्रश्नेन सेवया च ज्ञानम् उपदेक्ष्यन्ति। आचार्यसेवायाः रूपं कीदृशम् अस्ति इति विचारणीयम्। वस्तुतः गुरोः आज्ञापालनम्, अधीतविषयस्य निरन्तरं मननम् एव गुरुसेवायाः वास्तविकं रूपम् अस्ति। अत एवोक्तम् -

**अज्ञश्चाश्रद्धदानश्च संशयात्मा विनश्यति।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः।**

संशयात्मनः इहलोके धर्मार्थकाममोक्षाः न सिद्ध्यन्ति। अतः आत्मज्ञानं गुरोः सविधे श्रद्धया संपादनीयम् इति शास्त्रवचनम्।

**श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति।।**



महाभारतेऽपि गुरुभक्तिः गुरुवैभवं बहुधा वर्णितमस्ति। पार्थेन वञ्चितोऽपि एकलव्यः गुरुभक्तिपरायणेष्वग्रगण्यः अभवत्। उक्तमस्ति गुरोः वैभवम् -

**गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।**
**गुरुस्साक्षात् परब्रह्म तस्मै श्रीगुरवे नमः।।**

गुरुभक्तिविषये महाभारते एकलव्यकथा प्रसिद्धिं प्राप्ता। हस्तिनापुरप्रान्ते वने हिरण्यधन्वा नाम कश्चित् किरातनायकः अवसत्। तस्य एकलव्य नाम कुमारः अभवत्। स च युवा स्वपितृसमीपे अल्पशः धनुर्विद्यामभ्यस्तवान्। तस्यां विद्यायामधिकं प्रावीण्यं प्राप्तुं समर्थवन्तं गुरुमन्विष्यति स्म। धनुर्विद्यायां द्रोणाचार्य एव सर्वमहानिति बहुभ्यः श्रुत्वा कथञ्चित् तस्य समीपमुपगम्य कृताञ्जलिः एवं विज्ञापयामास- 'भोः गुरुदेव! अहं किरातनायकस्य हिरण्यधन्वनः पुत्रः एकलव्यनामधेयोऽहम्। मम पितुः समीपे धनुर्विद्या मया अल्पशः अभ्यस्ता। भवतः शुश्रूषया अस्यां विद्यायामधिकतरं नैपुण्यं प्राप्तुमिच्छामि। तदाकार्ण्य द्रोणाचार्यः कुमार! त्वं किरात इति वदसि; धनुर्विद्या वेदसमाना! अस्यामपि विद्यायां प्रयोगोपसंहारमन्त्राः बहवस्सन्ति। मन्त्रणामुऽच्चारणदोषः न केवलं फलाप्राप्तिः किन्त्वनर्थमप्यापतिष्यति। अतस्ते धनुर्विद्या न शिक्षणीया। तव श्रेयः अभिलषन्नेवं कथयामि इति प्रत्यवदत्। श्रुत्वैतत् निर्विण्णः एकलव्यः गुरवे नमस्कृत्य ततः प्रस्थितः। तदा द्रोणः इष्टफलावाप्तिरस्तु इत्याशिषं दत्तवान्। स किरातः स्वकुटीरमागत्य सुचिरं विचिन्त्य यथा कथञ्चित् धनुर्विद्या अभ्यसनीया इति दृढनिश्चयेन मृत्तिकया द्रोणाचार्यस्य प्रतिमां विरच्य एकत्र प्रतिष्ठाप्य पत्रैः पुष्पैश्च पूजयित्वा प्रतिमायाः अग्रे दृढदीक्षया शरप्रयोगमभ्यसति स्म। अचञ्चलश्रद्धाभक्तिविश्वासयुक्तस्य तस्य द्रोणाचार्यः स्वप्ने साक्षाद्भूय विद्यारहस्यानि शिक्षयति स्म। अतः अनतिकाले एव एकलव्यः धनुर्विद्यानिपुणः अभवत्। सावधानमनसा शिष्यः यदि आचार्यस्य वचनम् उपदेशं श्रुणोति तदनुसारं आचरितं च तर्हि स गुरोः प्रसन्नतां लभते। गुरोः प्रसादात् आशीर्वादात् च शिष्याः समुन्नतेः मार्गं यान्ति। आचार्यप्रसादात् मानवता नैतिकता स्वावलम्बिता च लभ्यन्ते। ज्ञानेन लौकिकम् आध्यात्मिकं ज्ञानं च लभेते। अतः आचार्यप्रसादात् वयं धर्मार्थकाममोक्षान् चतुरः पदार्थान् प्राप्नुमः। परमात्मा स्वयं आचार्यरूपेण

अस्माकं साहाय्यं पथप्रदर्शनं च करोति। अतः आचार्यः साक्षात् ईश्वरः अस्ति। यथा ईश्वरः अर्चनीयः अस्ति तथा आचार्योऽपि अभ्यर्च्यः अस्ति। आचार्यः एव गुरुः उच्यते।

अक्षरज्ञानप्रदायकः आचार्यः पूजनीयः भवति। अस्माकं मूर्खतां दूरीकृत्य ज्ञानज्योतिं प्रज्वाल्यमानः गुरु पदं-गुरुतरं भवति। समस्ते भूमण्डले अत्यन्तपूजनीयस्थानं वहति। श्रीरामचन्द्रस्य गुरुभक्तिः आदर्शप्रायः भवति। विश्वामित्रः रामस्य शिक्षागुरुः। साक्षात् नारायणरूपः रामः नररूपं धृत्वा मुनिवेषे गुरोः सविधे विद्याभ्यासं कृतवान्। मुनिराज्ञया जनकपुरप्रवेशसमये जनकपुरवासिनां दर्शनाभिलाषिणः रामलक्ष्मणौ किञ्चित् आलस्यं कृतवन्तः। तदानीं गुरुः विश्वामित्रः कोपोद्युक्तः भविष्यतीति मत्वा तेषां मनांसि दुःखेन पूरिताः आसन्।

यः मानवः गुरुचरणारविन्दानुरक्तः सः समस्तलोके अदृष्टजातकः भवतीति स्वयं श्रीरामः भरतं प्रति वदति। महर्षिं वेदव्यासं सर्वोत्कृष्टगुरुत्वेन स्थापयित्वा जनाः पूजयन्ति। व्यासः विष्णुस्वरूपः। आषाढमासे शुक्लपक्षे पूर्णिमायां तिथौ गुरोः व्यासस्य पूजनं भवति। महर्षिः वेदव्यासः सर्वेषां पुराणानां, ब्रह्मसूत्रादि धर्मदर्शनग्रन्थानां रचयिता अस्ति। तद्रचित ग्रन्थाः अस्माकं भारतीयानां पथप्रदर्शकाः सन्ति। अत एव वेदव्यासः अस्माकं गुरुः इति प्रसिद्धं गतः। स तु गुरूणां गुरुः अस्ति। अस्मिन् लोके येभ्यः सकाशात् विद्यार्थिनः विद्यां प्राप्नुवन्ति; ते गुरवः इति अभिहिताः भवन्ति। गुरूणां आदरः सर्वैः कर्तव्यः। मानवानां जीवने गुरोः सम्बन्धः अतीव श्रेष्ठतमः कथ्यते। जनानां पितरः केवलं तेषां जन्महेतवो भवन्ति। एवं पितरः स्वसन्ततिभ्यः केवलं भोजनानि वस्त्राणि च ददति। किन्तु गुरुः तेभ्यः ज्ञानं ददाति। येन मनुष्याः मनुष्याः भवन्ति। अतः गुरुः सर्वकाले आदर्तव्यः।

गुरवे सर्वलोकानां भिषजे भवरोगिणाम्।
निधये सर्वविद्यानां दक्षिणामूर्तये नमः॥



# अत्ति वरदः

**स्थलपुराणम्** - एकदा ब्रह्मा सत्यव्रतनामके स्थाने अश्वमेधयज्ञं प्रारम्भं चकार। तदा सः प्रथमपत्नीं सरस्वतीं त्यक्त्वा सावित्री-गायत्र्योः साकं यज्ञं कृतवान्। एनं विषयं ज्ञात्वा देवीसरस्वती यज्ञकार्यं भग्नं कर्तुं प्रयतता तदर्थं सा वेगवती नदी भूत्वा यज्ञस्य स्थगनाय वेगेन अवहत्।



भगवान् ब्रह्मा अस्मात् संकटात् रक्षणार्थं भगवान् विष्णोः प्रार्थनां कृतवान्। तया प्रार्थनया सन्तुष्टः विष्णुः वहमाननद्याः मार्गमध्ये शयितवान्। भगवतः कार्येण नदी स्थगिता। ब्रह्मणः यज्ञोपि सफलो जातः। यज्ञकुण्डात् विष्णुः प्रकटितो भूत्वा स्वदिव्यदर्शनमपि अयच्छत्। तदा ब्रह्मणः प्रार्थनानुसारं श्रीमहाविष्णुः तत्रैव श्रीवरदराजरूपेण मन्दिरे अवसत्। भगवान् ब्रह्मा अञ्जीरवृक्षात् मूर्तिं निर्माय तस्य प्रतिष्ठामकरोत्।

**अत्तिवरदः** - ब्रह्मणः यागात् उद्भूतः इति कारणात् रूपः परिवर्तितः। अशरीरवाक् कारणतः तम् अनन्ततीर्थे त्यक्त्वा प्राचीनमन्दिरे स्थितां शिलां काञ्चीपुरे प्रतिष्ठापितवान्। सः रजतपेटिकायां शयनावतारे ''अमृतसरः'' इत्युच्यमानायां पुष्करिण्यां शयितः। ४० वर्षेषु एकवारम् उपर्यागत्य शयन-उत्थितरूपभङ्गिमयोः दर्शनं यच्छति। पुष्करिणीरियं कदापि न शुष्यति।

१९७९ वर्षानन्तरम् अस्मिन् वर्षे जुलै १ दिनाङ्कतः आगस्ट् १७ दिनाङ्कपर्यन्तं भक्तदर्शनार्थं स्थापयन्ति। अस्मिन् समये भगवान् चतसृषु वेलासु अर्चनाः स्वीकरोति।

एनं मन्दिरं द्रष्टुं स्थानिकाः, इतरराज्यजनाः अपि आगच्छन्ति। अयमालयः काञ्चीपुरात् चेङ्गलपट्टु गमनमार्गे विद्यते। अस्मिन् अवसरे अयमालयः प्रातः ६ वादनादारभ्य मध्याह्न १२.३० पर्यन्तम्, एवमेव सायंकाले ३.३० वादनतः रात्रौ ८.३० वादन पर्यन्तं भगवतः दर्शनार्थम् उद्घाटितो भवति।



भारतदेशप्रधानमन्त्रिवर्यः गौ।। श्रीनरेन्द्रमोदी वर्यः
०६-०६-२०१९ दिनाङ्के तिरुमल श्रीस्वामिनः दर्शनं प्राप्तवान्।
तेन सह उभयराज्य (आन्ध्र, तेलङ्गाण) गवर्नर् गौ।। श्री इ.एस्.एल्. नरसिंहन् वर्यः,
आन्ध्रराज्यमुख्यमन्त्रिवर्यः गौ।। श्री वै.यस्.जगन् मोहन् रेड्डि वर्यश्च भागं गृहीतवन्तः।

गौ।। श्रीनरेन्द्रमोदीवर्याय ति.ति.दे. जीयर्स्वामिनः आशीः दत्तवन्तः।
ततः श्री स्वामिनः तीर्थ-प्रसादान्, श्रीस्वामिनः प्रतिमां च
ति.ति.दे. कार्यनिर्वहणाधिकारी श्री अनिल् कुमार् सिङ्घाल्, ऐ.ए.एस्., तथा च
तिरुमल संयुक्तकार्यनिर्वहणाधिकारी श्री के.एस्.श्रीनिवासराजु, ऐ.ए.एस्., वर्यौ दत्तवन्तौ।













श्री स्वामिनः प्रसादं स्वीकुर्वन्
भारतदेशप्रधानमन्त्रिः
गौ।। श्री नरेन्द्रमोदीवर्यः

## तिरुचानूरु श्रीपद्मावतीदेव्यै
## १७-०५-२०१९ तः १९-०५-२०१९ पर्यन्तं समाचरितः
## वार्षिकवसन्तोत्सवः



## सकाले वर्षाः आगत्य देशे
## सुभिक्षतायै तिरुमलायां
## पार्वेटमण्टपसमीपे २०१९ मे १४ तः १८ पर्यन्तं
## ति.ति.दे. शास्त्रोक्तरीत्या
## निर्वहितस्य कारीरिष्टियागस्य
## दृश्यमालिका









तिरुमलतिरुपतिदेवस्थानम्

**सकाले वर्षाः आगत्य देशे**
**सुभिक्षतायै तिरुपति**
**श्रीकपिलेश्वरस्वामिनः आलयस्य पार्श्वे**
**२०१९ मे १४ तः १८ पर्यन्तं**
**ति.ति.दे. शास्त्रोक्तरीत्या**
**निर्वहितस्य वरुणजपस्य**
**दृश्यमालिका**











०४-०६-२०१९ दिनाङ्के भारतदेशस्य उपराष्ट्रपतिः
गौ।। श्री एम्.वेङ्कय्यनायुडुवर्यः श्रीवेङ्कटेश्वरस्वामिनः दर्शनं प्राप्तवान्

तस्मै श्रीस्वामिनः चित्रपटं बहूकुर्वन्तौ ति.ति.दे. कार्यनिर्वहणाधिकारी श्री अनिल् कुमार् सिङ्घाल्, [illegible]
एवं तिरुमल संयुक्तकार्यनिर्वहणाधिकारी श्री के.एस्.श्री निवासरावु, [illegible] वर्यौ





०५-०६-२०१९ दिनाङ्के भारतदेशस्य उपराष्ट्रपतिः गौ।। श्री एम्.वेङ्कय्यनायुडु वर्यः
धर्मगिरि वेदविज्ञानपीठम् (तिरुमल) सन्दर्शितवान्।





आं.प्र. राज्यस्य नूतनमुख्यमन्त्रितया प्रमाणस्वीकारात् पूर्वस्मिन् दिने (२९-५-१९)
गौ।। श्री वै.एस्. जगन् मोहन् रेड्डि वर्यः श्रीवेङ्कटेश्वरस्वामिनः दर्शनं प्राप्तवान्।

तस्मै श्रीस्वामिनः तीर्थप्रसादं समर्पयन्तौ ति.ति.दे. कार्यनिर्वहणाधिकारी श्री अनिलकुमारसिङ्घाल्, [illegible]
तिरुमल संयुक्तकार्यनिर्वहणाधिकारी श्री के.एस्. श्रीनिवासरावु, [illegible] वर्यौ

१७-०७-२०१९ तिरुमल श्रीस्वामिनः आणिवर आस्थानसन्दर्भे ....

# तिरुमल श्रीस्वामिनः आणिवर - आस्थानमहोत्सवः

तेलुगु मूलम्- श्रीमती एम्.विजयलक्ष्मी
संस्कृतानुवादः श्री डि.हरिकृष्णः

आडिमासः इत्युक्ते कर्काटकमासः। कर्काटकादारभ्य धनुरन्तं यावत् सूर्यसञ्चारयुतः षण्मासकालः दक्षिणायनपुण्यकालः। तिरुमल श्रीस्वामिने दक्षिणायनप्रारम्भपुण्यकाले विशेषपूजायै सङ्कल्प्य आणिवरास्थानस्य व्यवस्था कल्पिता। वास्तवं नाम आडिपूजा। तदेव आणिवल् इति परिवर्तितम्। तमिलसंस्कृति प्रभावेन 'ड' इति 'ण' वत् परिवर्त्य आणिवर् इति प्रसिद्धिः। अस्यां विशेषपूजायां स्वामिने आगम्यमानः आयः एवमेव आर्थिकसंवत्सरारम्भो भूत्वा अस्माद्दिनादारभ्य अधिकारिणः परिवर्तनान् प्राप्य, परिपालनायाः सुष्ठु चलनार्थं स्वामिनः पार्श्वे विनत्यः समर्प्य अधिकारं प्राप्नुवन्ति इति वक्तुं शक्नुमः।

पुण्यकाले पुण्यकर्माचरणं विशेषसंस्कृतिः। आणिवर-आस्थानसमये स्वामिनः आराधना, सेवा, कीर्तना, ध्यानादिकश्च जन्मसाफल्यस्य कृते, भगवदनुग्रहप्राप्तये च सोपानान्येव। निरन्तरतया रात्रौ ब्रह्मादिदेवेभ्यः, प्रातः मानवेभ्यश्च सेव्यमानः श्रीवेङ्कटेशः स्वीय अनुग्रहेण सर्वान् सन्तुष्टं करोति। एवं रूपी वेङ्कटेश्वरस्वामिने तिरुमलायां भूयमानेषु वार्षिकोत्सवेषु अत्यन्तप्रधानपात्रं वहति आणिवर-आस्थानम्।

आणिवरास्थानसमये प्रतिदिनं प्रातः सुप्रभातं, विश्वरूपदर्शनम्, तोमालसेवा, ततः स्नपनमण्डपे श्रीस्वामिने (कोलुवु मूर्तये) छत्रचामरमार्यादाभिः, स्वर्णसिंहासने आसीनो भवति। तदा देवस्थानस्य उद्योगभृत्यबृन्दः, श्रीस्वामिने पञ्चाङ्गश्रवणं कारयन्ति। तद्दिनस्य तिथि-वार-नक्षत्रादीनां विशेषैः साकम् उत्सवविशेषान् स्वामिने श्रावयन्ति। एतदेव न, अपि तु पूर्वतनायस्य, स्वर्ण - रजत - आभरण - पात्रादिवस्तूनां मूल्यं, निकरादायं (नाणकादायः) च स्वामिने अत्यन्त भक्ति-प्रपत्तिभिः श्रावयन्ति। एनान् सर्वानपि कोलुवु श्रीस्वामी श्रुत्वा, आनन्दं प्राप्नुवन् भक्तान् अनुगृह्णति। इदं प्रतिनित्यं भूयमानं श्रीस्वामिनः आस्थानम्।

किन्तु प्रतिदिनं भूयमानात् आस्थानात् उत्तमतया दक्षिणायनपुण्यकाले (जूलै १७) भूयमानम् आणिवरास्थानम् बहु विशिष्टम्। इदं तिरुमलालयचरित्रे अत्यन्तप्राधान्यतां च प्राप्तम्।

प्रतिदिनवत् दक्षिणायनसंक्रमणदिने (जुलै १७) प्रातः श्रीस्वामिने सुप्रभात-विश्वरूपदर्शन, तोमालसेवाः च यथाक्रमेण निर्वहन्ति। परन्तु प्रतिदिनं कोलुवु



श्रीनिवासमूर्तेः स्वर्णसिंहासने स्थापनं न भवति। तोमालसेवानन्तरं श्रीदेवीभूदेवी समेताय श्रीमलयप्पस्वामिने (उत्सवमूर्तिभ्यः) श्रीविष्वक्सेनाय (श्रीस्वामिनः सेनाधिपतिः) च आलये एकान्ततया तिरुमञ्जनं (अभिषेकः) भवति। ततः प्रथम सहस्रनामार्चना, नैवेद्यञ्च (प्रथमघण्टा) भवतः।

ततः स्वर्णप्राङ्गणस्याग्रे तिरुमहामणि (घण्टामण्टपे) सर्वभूपालवाहने श्रीदेवीभूदेवीभ्यः साकं श्रीस्वामिनं स्वर्णप्राङ्गणस्याग्रे गरुत्मतः अभिमुखे आह्वयन्ति। सर्वाभरणैः, सुगन्धपरिमलयुतपुष्पमालादिभिश्च उत्सवमूर्तीः अलङ्कुर्वन्ति।

श्रीस्वामिनः पार्श्वे एकैकस्मिन् पीठे दक्षिणाभिमुखे श्रीविष्वक्सेनमपि आहूय आभरणैः, पुष्पमालादिभिश्च अलङ्कुर्वन्ति। शिरस्त्राणं, खड्ग च धृत्वा अत्यन्तभयभक्तिभिः साकं श्रीस्वामिनः आज्ञां पालयितुं सिद्धः सन् सन्नद्धो भवति सेनाधिपतिः।

अनन्तरम् आनन्दनिलयस्य मूलविराट् कृते, स्वर्णप्राङ्गणपार्श्वस्थास्थाने आहूतेभ्यः उत्सवमूर्तिभ्यः सेनाधिपतये च विशेषप्रसादान् निवेदयन्ति।

नैवेद्यसमर्पणानन्तरं योगनरसिंहस्वामिनः आलयस्य पार्श्वे स्थितस्य परिमलकपाटिकातः श्रीमान् पेद्दजीयङ्गार् वर्येण बृहद् रजतकण्डोले बद्धान् षट् कौषेयवस्त्रान् शिरोपरि धारयन् छत्रचामरमङ्गलवाद्यैः पुरस्सरं, वेदनादघोषपुरस्सरं श्रीमान् चिन्नजिय्यङ्गार् वर्यः, एकाङ्गिनः, देवस्थानस्य कार्यनिर्वहणाधिकारी, संयुक्तकार्यनिर्वहणाधिकारी, उपकार्यनिर्वहणाधिकारी, सहायकार्यनिर्वहणाधिकारी, पारुपत्यदार् प्रभृतयः अधिकारिणः च सर्वेऽपि आलयस्य रजतप्राङ्गणस्य पुरतः स्थितस्य ध्वजस्तम्भस्य प्रदक्षिणतया आगत्य,



ततः साक्षात् आनन्दनिलय विमानस्य प्रदक्षिणां कुर्वन् समागत्य आनन्दनिलये श्रीस्वामिनः मूलमूर्तिपार्श्वे समर्पयन्ति। पेद्दजिय्यङ्गार् वर्यः, चिन्नजिय्यङ्गार् वर्यः, एकाङ्गिनः एव आनन्दनिलयप्रवेशं कुर्वन्ति। अर्चकाः झटिति कुलशेखरपडि (श्रीस्वामिनः सम्मुखे स्थित कडप) पार्श्वे आच्छादनपटं पिधानं कुर्वन्ति। अन्ते अर्चकस्वामिनः श्रीजिय्यङ्गार् वर्येण षट्सु कौषेयवस्त्रेषु चत्वारि वस्त्राणि श्रीस्वामिनः मूलमूर्तये अलङ्कार भवति। एकं किरीटाय, द्वितीयं नन्दकखड्गाय, तृतीयं धौतवस्त्रतया चतुर्थम् अङ्गवस्त्रतया अलङ्कुर्वन्ति। अच्छादनपटस्य निष्कासनानन्तरं अर्चकस्वामी श्रीवेङ्कटेश्वरस्वामिनः मूलमूर्तिशिरसि परिवट्टम् (कौषेयवस्त्रं) बद्ध्वा पूजाः, आरार्तिक्यानि च कुर्वन्ति। आरार्तिक्यानन्तरं प्रधानार्चकाः प्रथमतया तीर्थं स्वीकृत्य, शठारिमर्यादां स्वीकुर्वन्ति।

ततः श्री जिय्यङ्गार् वर्याः, कुलशेखरपडि तः बहिरागत्य तीर्थं स्वीकृत्य पुनः अन्तेगत्वा शठारि मर्यादान् स्वीकुर्वन्ति। एवमेव चिन्नजिय्यङ्गार्वर्यः, एकाङ्गिनः च (आनन्दनिलये अर्चकैर्विना अन्ये तीर्थं न स्वीकुर्वन्ति) तदुपरि आरार्तिक्यस्वीकरणं, तीर्थ-शठारिमर्यादाः स्वीकुर्वन्ति। देवस्थानकार्यनिर्वाहणाधिकारिभ्यः, आलयाधिकारिभ्यः, मिराशिभ्यः च सर्वेभ्यः तीर्थ-चन्दन-शठारि-ताम्बूलमर्यादानां परिसमाप्त्यनन्तरे। श्रीजिय्यङ्गार् अवशिष्टकौषेयवस्त्रे शिरसि निधाय स्वर्णप्राङ्गणे स्थितास्थाने समाहूतेभ्यः उत्सवमूर्तिभ्यः समर्पयन्ति। अर्चकाः अनयोः कौषेयवस्त्रयोः एकं श्रीमलयप्पस्वामिने द्वितीयं विष्वक्सेनवर्याय च अलङ्कुर्वन्ति।

ततः प्रधानार्चकः स्वशिरसि श्रीस्वामिनः पादवस्त्रेण परिवट्टम् (शिरोबद्धं लघु कौषेयवस्त्रम्) बद्ध्वा श्रीस्वामिनः ऊपरि, विष्कसेनोपरि च कुङ्कुमाक्षतान् क्षिपति। ततः सेनाधिपतये परिवट्टं बद्ध्वा श्रीस्वामिनः उपरि क्षिप्ताक्षतान् विष्वक्सेनोपरि प्रक्षिप्य, शठारि मार्यादान् निर्वहन्ति।

तदनन्तरम् अर्चकः श्रीस्वामिना तण्डुलदानं, दक्षिणां च स्वीकृत्य, ''नित्यैश्वर्यो भव'' इति स्वामिनम् आशीर्वदति। तत्पश्चात् अर्चकः शठारिमर्यादान् स्वीकृत्य, श्रीस्वामिने कोलुवु (स्थापन), मङ्गलारार्तिक्यान् निर्वहति। अस्मिन् स्वामिने तिलपिष्टं (चूर्णं) श्रीस्वामिने निवेदयति।

ततः अर्चकाः पेद्दजीयङ्गार्-वर्याय परिवट्टं बद्ध्वा श्रीस्वामिनः पादपार्श्वे स्थापितस्य श्रीजिय्यङ्गार् वर्याय स्वीय क्षारं (सील्) दत्वा, देवस्थानस्य ''लच्चन'' इत्युच्यमानं कुञ्चिकागुच्छं, तस्मै दत्वा श्रीस्वामिने आरर्तिक्यं निर्वह्य, तीर्थ-चन्दन-शठारिमर्यादाः कुर्वन्ति। ततः कुञ्चिकागुच्छः श्रीस्वामिनः पादपार्श्वे स्थाप्यते।



एवमेव श्रीचिन्नजिय्यङ्गार् वर्याय स्वीयं क्षारं दत्वा, कुञ्चिकागुच्छं (लच्चन) हस्ते दत्वा आरार्तिक्य-तीर्थ-शठारि-चन्दन-ताम्बूलादयः सत्काराः आचरन्ति। ततः एकाङ्गिने अपि उपर्युक्तविधिना समाचरन्ति।

ततः तिरुमलतिरुपति -देवस्थानपक्षतः उन्नताधिकारिणे श्रीकार्यनिर्वहणाधिकारिणे एव परिवट्टं बद्ध्वा देवस्थानस्य क्षारं, कुञ्चिकागुच्छं (लच्चनं) हस्ते दत्वा आरार्तिक्य-चन्दन-ताम्बूल-तीर्थ-शठारि-सत्काराः भवन्ति।

ततः एकाङ्गिः शिरसि परिवट्टं बद्ध्वा आस्थाने समाहूतानां भक्तानां सकाशात् श्रीस्वामिने उपायनान् स्वीकृत्य कार्यनिर्वहणाधिकारिणे समर्पयति। स च तान् एकस्मिन् स्यूते स्थाप्य, क्षारमुद्रणं कृत्वा, रजतकण्डोले स्थाप्य, शिरसि धार्य, गत्वा श्रीस्वामिनः दानपात्रे समर्पयति।

एकाङ्गिने शठारिमर्यादादि समाप्त्यनन्तरं, श्रीकार्यनिर्वहणाधिकारिभ्यः आरार्तिक्य - ताम्बूल - तीर्थ - शठारिमर्यादाः भवन्ति। ततः देवस्थानधर्मकर्तृमण्डलि अध्यक्षाय, सभ्येभ्यः, संयुक्तकार्यनिर्वहणाधिकारिणे, तिरुमलआलयनिर्वाहकेभ्यः, सहायकार्यनिर्वाहकेभ्यः, पारुपत्यदारुभ्यः च आरार्तिक्य-शठारि-ताम्बूलादिमर्यादाः भवन्ति।

ततः गमेकार्, महन्तु, मैसूरुराजा, ताल्लपाक, तरिगोण्डवर्याणाम् आरार्तिक्यानि भवन्ति। तदनन्तरं तत्र समागतेभ्यः भक्तेभ्यः सकाशात् एकैक-रूप्यकं स्वीकृत्य सर्वेभ्यः ''रूप्यक आरार्तिक्यम्'' प्रदानं भवति। आरार्तिक्याय स्वीकृतान् रूप्यकान् तत्क्षणे एव कार्यनिर्वाहकाणां समक्षे खजानां प्रापयन्ति।

पुनश्च अन्तिमे श्री जिय्यंगार् वर्याय, श्रीकार्यनिर्वहणाधिकारिणे एव परिवट्टं बद्ध्वा शठारिमर्यादाः ददति। अनन्तरं श्रीस्वामिने निवेदितान् प्रसादान् वितरन्ति। आणिवरास्थानदिने आर्जितसेवाः नैव भवन्ति।

ततः, श्री स्वामी देवीभ्यः साकं तस्मिन् मण्टपे (द्वितीयघण्टा) मध्याह्ननैवेद्यसमर्पणान्तं तिष्ठति। अनन्तरं सायंकाले तिरुमल पुरवीथिषु रमणीयतया अलङ्कृते पुष्पान्दोलिकायाम् अत्यन्तवैभवेन विहरणं करोति। उत्सवानन्तरं सः स्वामी देवीभ्यः साकम् आलयप्रवेशं करोति।

ये स्वामिनं पुण्यकाले विशेषपूजया अर्चन्ति, ते धन्याः कीर्ति-विजय-इष्टकाम्यार्थसिद्धिम् एवमेव विष्णुलोकप्राप्तये पात्राः भवन्तीति आगमशास्त्रं वर्णयति। अतः एवं रूपी कार्यक्रमेषु भागं गृहीत्वा ''रूप्यक आरार्तिक्ये'' उपायनान् समर्प्य स्वामिनः आशीः प्राप्नुमः।

(की.शे.पण्डित वेदान्तं जगन्नाथाचार्यवर्यस्य 'श्रीवेङ्कटेश वैभवम्' एवमेव श्रीजूलकण्टि बालसुब्रह्मण्यवर्यस्य ''श्रीनिवासवैभवम्' इति ग्रन्थे आधारीकृत्य.....)





यदि दैवात् फलं नास्ति छाया केन निवार्यते।।



- श्री अङ्कुरवत्सः

# वासुदेवः सर्वम्

ईश्वरः सर्वत्रास्तीति सर्वेषु श्रुति-स्मृति-पुराणादिषु प्रोक्तः विषयः एव। स च ईश्वरः ब्रह्मनाम्ना, प्रजापति नाम्ना एवं बहुविधनामभिः व्याहृतः। भगवद्गीतायां दशमेऽध्यये विभूतियोगे साक्षात् श्रीभगवानेव -

**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः।।**

अर्थात् अहं सम्पूर्णजगतः उत्पत्तिकारणः, एवमेव मत्तः एव सर्वं प्रवर्तते इति एवं प्रकारेण ज्ञात्वा श्रद्धाभक्तियुताः बुद्धिमन्तः भक्ताः मां नित्यं भजन्ते। इति।

अस्तु तर्हि सर्वत्र स्थितस्य ईश्वरस्य पूजा कथं करणीया इति सन्देहः मानवस्य मनसि उद्भवति। तस्य सन्देहस्य निवृत्ति पुरस्सरं साक्षात् गीताचार्यः ''ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति'' इति बोधितवान्।

तर्हि हृद्देशः एव अर्चनास्थानं वर्तते। हृद्मन्दिरमपि कथितुं शक्नुमः। नृसिंहपुराणे भगवतः मन्दिरस्य सम्मार्जनेन, शोधनेन च वैकुण्ठप्राप्तिः भवतीति प्रोक्तम्। तर्हि अत्र हृद्देशरूपी मन्दिरे विद्यमानस्य अज्ञानान्धकार-अरिषड्वर्गरूपी अवकरस्य अपसरणपूर्वकं मार्जनेन, शोधनेन एवं ज्ञानरूपी दीपस्य प्रकाशनेन अवश्यं सः पुरुषः नित्यज्ञानानन्दमयः सच्चिदानन्दस्वरूपो भूत्वा वैकुण्ठमवश्यं प्राप्नोति।

अर्थात् भगवतः स्वरूपं ''वासुदेवः सर्वमिति'' जानन् हृद्देशस्य मालिन्यनिर्मूलन पुरस्सरंअन्तर्हृदये भगवन्तं ध्यायन् भक्ताः तरन्ति। गीतायां सप्तमाध्याये ईश्वरः सर्वत्र विद्यमानविषये -

**मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय!**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव।।**

अतः अति दुर्लभं बहुकष्टेन लभ्यमाणं मनुष्यजन्म प्राप्य वयं सर्वेपि 'वासुदेवः सर्वमिति' ज्ञात्वा तं परमात्मानं भजामः।

# बालविनोदिनी ४



## वचनं शीलमाख्याति

अथैकदा कश्चिद्राजा दण्डकारण्यं सपरिवारं मृगयार्थं गतवान् आसीत्। वन्यसत्वम् अनुसरन् स राजा सहचरेभ्योऽमात्यादिभ्यो दूरम् अगच्छत्। ततस्ते सर्वे राजानम् अन्वेष्टुम् इतस्ततः अभ्रमन्। अरण्यमध्ये एकस्मिन् उटजे कश्चन अन्धसाधुः न्यवसत्। राजानमन्वेष्टुं प्रधानामात्येन प्रेषितः कोऽपि सैनिकः तत्र प्राप्तः। वृक्षतले उपविष्टम् अन्धसाधुं दृष्ट्वा सगर्वम् अवदत् सः 'रे अन्ध! अपि आगतः अस्माकं राजा अत्र?' इति। तदाकर्ण्य साधुः उवाच 'अन्धः अहम्। न द्रष्टुं समर्थः अस्मि' इति। 'जाने त्वम् अन्धोऽसि। तथापि न बधिरः। अश्वस्य पदरवाः अपि न श्रुताः त्वया' इति सोत्प्रासम् उक्तं तेन। साधोः न इति प्रत्युत्तरं श्रुत्वा दुर्वचनानि भाषमाणः स निर्गतः तस्मात् स्थानात्।

अत्रान्तरे सेनापतिः तत्र उपस्थितः। भोः साधोः! अप्यस्माकं नृपतिः आगतोऽत्र?' इति पृष्टे सति 'नृपतिरागतः, परम् एकः सैनिकः राजानम् अन्विष्यन् उत्तरां दिशम् अगच्छत्' इति उक्तवान्। सः ततश्च सेनापतिः अन्यत्र अन्वेषणार्थं निरगच्छत्। अनन्तरं स्वयं प्रधानामात्यः तत्र आगत्य रथात् अवतीर्य च सविनयं साधुम् अपृच्छत् ''भोः साधुवर! वयं राज्ञा सह अस्मिन् दुर्गमवने मृगयार्थम् आगताः। परं दुर्भाग्येण अस्मत् वियुक्तः महाराजः। अपि जानाति भवान् किञ्चित् अस्मिन्विषये'? 'भद्र न किमपि जानामि' इति श्रुत्वा प्रधानमात्योऽन्यत्र निरगच्छत्।

अथाल्पकालेन परिश्रान्तो राजा तत्र उपस्थितः, यत्र स साधुरुपविष्टः। कृताञ्जलिना भणितं राज्ञा 'भगवन्, तृषार्तः अहम्, किञ्चित् जलमिच्छामि पातुम्'। तदा स अवदत् 'राजन् स्वागतं ते। परिश्रान्तो लक्ष्यसे। अतो न सहसा जलं पेयम्। कन्दमूलफलानि भुक्त्वा जलप्राशनं कर्तव्यम्'। तदा सविस्मयं राज्ञा पृष्टम् 'ननु नेत्रहीनेन भवता अहं राजा इति कथं विज्ञातम्। कश्चिदागतोऽत्र माम् अन्वेष्टुम्?' इति। तत् श्रुत्वा अब्रवीत् सः 'प्रथमं सैनिको भवन्तमन्वेष्टुम् आगतः। तत्पश्चात् सेनापतिः। तदनन्तरं प्रधानामात्यः। अधुना भवानत्र उपस्थितः' इति।

तदा राजा पप्रच्छ, 'तेषाम् अधिकारपदानि अपि कथम् अभिज्ञातानि'। साधुः प्रत्यवदत् 'तैःप्रयुक्तैः शब्दविशेषैः। सैनिकः मां 'रे अन्ध' इति सम्बोधितवान्। सेनापतिना 'भोः साधोः' इति उक्तम्। प्रधानामात्यः सादरं 'साधुवरः' इति अब्रवीत्। भवता सप्रणामं 'भगवन्' इति गौरवपदं प्रयुक्तम्। राजन् आदरान्वितवचांसि शीलश्रेष्ठतां द्योतयन्ति' इति। तदाकर्ण्य संतुष्टो राजा 'धन्यः खलु भवान्, यः शब्दमात्रेण शीलं परीक्षते। इत्युक्त्वा तं मुनिवरं प्रणम्य स्वनगरं प्रतिनिवृत्तः।





**गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।**
**गुरुस्साक्षात् परब्रह्म तस्मै श्रीगुरवे नमः।।**

# तपसा साध्यते सर्वम्



तेलुगु मूलम्- डा।। वैष्णवाङ्घ्रि सेवकदासः
संस्कृतानुवादः - श्रीमती दुर्गा

**वाहनानां चलनार्थम् इन्धनस्यावश्यकता वर्तते। वाहनोपकरणस्य चलनाय विद्युत्पेटिका भवेदेव। मनुष्ये धावनाय शक्तिः आवश्यकी। एवमेव विजयान् प्रापणार्थं तपः आवश्यकः।**

तपः इत्युक्ते किम्? जीवने तपः प्रभावं न ज्ञात्वा मनुष्याः सुवर्णावकाशान् न प्राप्नुवन्ति। तपसा शारीरिकश्रमः भवति। अनेन शक्तिः एकत्रितो भवति। भगवद्दर्शनार्थं भक्तध्रुवः षण्मासं यावत् तपं कृतवानिति भागवते प्रोक्तम्। प्रस्तुतकाले विद्यार्थिनः अपि ऐ.ऐ.टि. मध्ये भागप्रापणार्थं तपः एव कुर्वन्ति। किन्तु ते तपं कुर्वन्तीति न चिन्तयन्ति। केवलं कष्टम् अनुभवामः इति मनसि चिन्तयन्ति। अनेन तपसा उचितफलः आयातीति धैर्यं तेषु नास्ति।

भोगः तपसः व्यतिरेकः पदः। यः भोगलालसायां निमग्नः, अथवा विनोदे कालं यापयति तस्मिन् शक्तिः न्यूना भवति। किन्तु तपसि युतस्य शक्तिः निरन्तरं वर्धनशीला एव भवति। विजयसिध्यर्थं तपसः आवश्यकता अतीव वर्तते। नैजे तावत् तदनिवार्यः।

अतः विजयकामुकाः विद्यार्थिनः भगवद्गीतायां प्रोक्तस्य तपसः विषये अवगच्छेयुः, तस्याचरणं कुर्युः, शक्तिं प्राप्नुयुः, तद्वारा विजयं साधयेयुः।

तपः त्रिविधः इति भगवद्गीतायां (१७ अध्यायः, १४,१५,१६ श्लोकाः) प्रोक्तम्। विद्यार्थिनः, युवानश्च एनं श्रद्धया अवगाहनं कुर्युः।

"देवद्विजगुरुप्राज्ञपूजनं, शौचम्, आर्जवम्, ब्रह्मचर्यम् अहिंसा च शारीरिकतपः इत्युच्यते।"

"सत्यं, प्रियहितम्, अनुद्वेगकरं वाक्यं, स्वाध्यायाभ्यसनं च वाङ्मयं तप इत्युच्यते।"

"मनः प्रसन्नता, मौनम्, आत्मविनिग्रहः, भावसंशुद्धिः, सौम्यत्वञ्च मानसं तप उच्यते"।

अर्थात् भगवद्गीतायां सर्वेषां कृते त्रिविधतपसां वर्णनं कृतम्। ते च देहस्थायिमध्ये, वाचिकस्थायिमध्ये, मानसिक स्थायिमध्ये च सन्ति। ज्येष्ठानां पूजनं, सेवनं प्रस्तुते काले सर्वेऽपि विस्मृतवन्तः। अतः एव तेभ्यः ज्येष्ठेभ्यः सकाशात् वरं न लभ्यते। ज्येष्ठानां सेवनेन अद्भुतशक्तिः आयाति।

ततः वचः नियन्त्रणमपि तप एव। साधारणतया सर्वे वाचा अपशकुनान्येव वदन्तः दृश्यन्ते। 'एतत्कार्यं कदापि न भवति, 'अस्मिन् प्रवेशः कठिनः, ऐ.ऐ.टि मध्ये भागं कष्टतरमिति' नानाविधवचोभिः तथैव फलान् प्राप्नुवन्ति। किन्तु वाचा प्रियान्, शुभान् वदेयुः। आध्यात्मिकग्रन्थानां पठनमपि वाचिकतपः इत्याचक्षते।

अनन्तरं मानसिकतपः अधुनातनकाले अत्यन्तावश्यकः। अनावश्यकान् मनोवेदनाकारणीभूतान् आलोचनान् न चिन्तयेयुः। अनावश्यकविषयेषु अधिकवार्तालापेन, चिन्तनेन च मनः दुःखं प्राप्नोति। 'अहं विजयमवश्यं प्राप्नोमि, विजयः मम एव' इति वारं वारं वदनेन, चिन्तनेन च मानसिकदृढता आयाति। अतः विद्यार्थिनः, युवानश्च त्रिविधतपोभिः लक्ष्यान् निर्माय तेषाम् आचरणेन विजयान् अवश्यं साधयन्ति। नास्त्यत्र सन्देहः। सर्वत्र विजयार्थम् इदमेव रहस्यम्।



# क्षेमदायकः आहार्यौषधः
# जीरकः

तेलुगु मूलम् - डा. चिट्टिभोट्ल मधुसूदनशर्मा
संस्कृतानुवादः - श्री अमरनाथशर्मा

"धर्मार्थकाममोक्षाणाम्, आरोग्यं मूलमुत्तमम्" - इति वदति सनातनभारतीयवाङ्मयम्। धर्मार्थकाममोक्षाणां साधनार्थम् आरोग्यं प्रधानपात्रं भजति। आरोग्यरक्षणार्थम् आहारः मुख्यः। आहारपदार्थानां पाकनिर्माणे वर्ण-रुचि-सुवासनायाः च कृते नानाविधान् पदार्थान् प्रयोगं कुर्वन्ति। तेषु अपि भगवान् नानाविधौषधगुणान् निक्षिप्य अस्मभ्यं प्रदत्तवान्।

एवं रूपी पदार्थेषु जीरकेषु स्थितानाम् औषधगुणानां विषये किञ्चित् ज्ञास्यामः। जीरकम् आङ्ग्ले Cumin Seeds इति कथयन्ति।

एपियेसि इत्युच्यमानस्य वृक्षकुटुम्बस्य सम्बन्धितस्य अस्य शास्त्रीयं नाम Cuminum Cyminum.

जीरकचूर्णम् औषधनिर्माणसमये, प्रयोगे च जीरकान् शोष्य चूर्णीकृत्वा प्रयुञ्ज्यात्।

## जीर्णाशयव्याधीनां कृते -

जीरकचूर्णं ५० ग्रा, कुस्तुम्बरीन् शोष्य कृते चूर्णं ५० ग्रा, लवणं २५ ग्रा. सम्मेल्य, स्थाप्य प्रतिदिनम् एकवारं भोजने प्रथमग्रासे एकचमसपरिमितं चूर्णं सम्मेल्य सेवनेन जीर्णाशयस्य अनारोग्यसमस्याः पार्श्वे न आयान्ति।

## वृश्चिकदंशने -

जीरकं, लवणं, मधुं, घृतं समानप्रमाणेन सम्मेल्य पेषणं कृत्वा दंशनस्थानोपरि लेपनेन बाधा उपशान्तिं प्राप्वा पीडा नश्यति। मधुमक्षिका प्रभृति कीटानां दंशनसन्दर्भेऽपि एनमौषधं प्रयोक्तुं शक्नुमः।

## रक्तहीने -

जीरकचूर्णं, गुडचूर्णम् एकैकं १०० ग्रा. प्रमाणेन स्वीकृत्य, अवहननं कृत्वा स्थाप्य प्रतिदिनं त्रिवारं लघुगोलकप्रमाणेन चोषणं कुर्वन् स्वीकुर्यात्।

अस्य प्रयोगेण मध्ये मध्ये आगम्यमानाः ज्वराः, चर्मसमस्याश्च न्यूनीभवन्ति।

## दन्तधावनचूर्णम् -

जीरकचूर्णं, हरडत्वक् चूर्णं, लवणं च एकैकं ५० ग्रा. प्रमाणेन स्वीकृत्य, सम्मेल्य, दिने एकवारं द्विवारं वा दन्तधावनचूर्णतया प्रयोगेण दन्तपालीपीडाः, दन्तपालीतः रक्तस्रावः, दन्तपीडाश्च नश्यन्ति।

## मूलव्याधौ -

१०ग्रा. जीरकचूर्णं, २०ग्रा. मिश्रीचूर्णं, ३०ग्रा. वंशलवणचूर्णञ्च सम्मेल्य, स्थाप्य प्रातः - रात्रौ आहारग्रहणात् अर्धघण्टापूर्वं १०० मि.ली. जले २-३ ग्रा. चूर्णं सम्मेल्य सेवयन्, प्रतिदिनम् एकवारं जीकरचूर्णं जलेन सह पेषयित्वा पिष्टम् उपर्यावर्तनरीत्या लेपनेन उपशान्तिर्भवति।

## ग्यास्ट्रिक् ट्रबुल् -

जीरकचूर्णं, आमलकीचूर्णं, शुष्कपाटल (गुलाबी) चूर्णं, लवणं च एकैकं ५०ग्रा. प्रमाणेन स्वीकृत्या सर्वान् सम्मेल्य, स्थाप्य प्रतिदिनं द्विवारं आहारग्रहण-अनन्तरम् अर्धचमसचूर्णं १०० मि.ली.जले सम्मेल्य सेवनेन उदरे वायुविकाराः, मलबद्धसमस्याः च न्यूनीभवन्ति।



### खास्यनिवृत्यै -

जीरकचूर्णं १०ग्रा. लवणं १/४ चमसपरिमाणं कृष्णमरीचिकाचूर्णं १/४ चमस परिमाणं च सम्मेल्य, स्थाप्य दिने द्विवारं १/२ ग्रा. चूर्णं चोषयेत्।

### स्थूलकाये -

प्रतिदिनं प्रातः २०० मि.ली.जले ५ ग्रा. जीरकान् स्थाप्य किञ्चित् कालम् आर्द्रीकृत्वा, शोष्य पुनर्निष्क्रास्य लघूष्णे सति संशोध्य आम्लरसम् अर्धयागं, मधुमेकचम सपरिमाणेन मेलयित्वा सेवनेन शरीरेस्थित (भूर्जः) न्यूनीभूत्वा भारः न्यूनतां याति।

### पैत्यविकारेषु -

१/४ कि.जीरकान् संशोध्य, शोष्य, पुनः शीतलीकृत्वा एकस्मिन् पात्रे स्वीकृत्य लयपर्यन्तम् आम्लरसं दत्वा शोषयेत् एवं सप्तवारम् आम्लरसं दत्वा शुष्कं कुर्वन् चूर्णं निर्मीयात्। अयमेव भावनजीरक इत्युच्यते। आयुर्वेदविक्रयशालासु लभ्यमानस्य अस्य प्रातः, सायं एकैकस्मिन् समये १/२ ग्रा. चूर्णं ५०मि.ली.जले सम्मेल्य सेवनेन शिरोवेदनाः, वान्ताः, मुखे जलस्रावादयः, पैत्यविकाराश्च न्यूनीभवन्ति।

### रक्तशुद्ध्यै -

जीरकचूर्णं, स्फटिकचूर्णम् आयुर्वेदौषधविक्रयशालासु लभ्यमानम् अतिमधुरचूर्णम् एकैकं ५०ग्रा. परिमाणेन सम्मेल्य, स्थाप्य प्रतिदिनम् एककाले १०० मि.ली. जले अथवा उष्णदुग्धे अर्धचमसप्रमाणं चूर्णं सम्मेल्य सेवनेन चर्मदोषाः, मुखयव्याधयः, उदरे उष्णता च न्यूनीभूत्वा मानसिकप्रशान्तता आयाति।

जीरकाद्यरिष्टा, जीरकबिल्वादि लेह्यं, हिङ्ग्वाष्टकचूर्णप्रभृतीनां औषधनिर्माणे अपि जीरकान् उपयुञ्जन्ति।



## ‘सप्तगिरि’ ग्राहकेभ्यः सूचनाः

**सप्तगिरि-मासपत्रिकायाः पाठकेभ्यः प्रतिमासं सकाले प्रापणार्थं नानाविधकार्यान् करोतीति अवगतः विषयः एव। अस्मिन्नेव क्रमे भक्तानां सङ्केतानां क्रमीकरणार्थं प्रयत्नं करोति। पाठकाः एनं विषयं दृष्टौ स्थाप्य अधोनिर्दिष्ट प्रकारेण प्रधानसम्पादकस्य कार्यालयं प्रति सम्पर्कं कुर्वन्तु।**

**१.सप्तगिरि मासपत्रिकायाः सम्बन्धिताः सूचनाः, आक्षेपान् च** sapthagiri_helpdesk@tirumala.org **द्वारा सूचयितुं शक्नुवन्ति।**

**२. सप्तगिरि ग्राहकाः सङ्केतस्य परिवर्तन-सम्बन्धी विवराणां कृते ०८७७-२२६४५४३ दूरवाणीं प्रति स्वीय सम्पूर्णं सङ्केतं, दूरभाषा संख्यया साकं कार्यालयस्य कार्यसमये (प्रातः १०.३० तः सायं ५.०० मध्ये) पुनः ज्ञापयन्तु।**

**३. उपर्युक्त दूरवाणी संख्या द्वारा अथवा** sapthagiri_helpdesk@tirumala.org **द्वारा वा सूचयन्तु।**

**४. अन्तर्जाल (आन्लैन्) ग्राहकाः स्वीय सम्पूर्णं सङ्केतं ति.ति.दे. अन्तर्जालपुटे ज्ञापयन्तु!**



Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy.E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507.



महाशेषवाहनोपरि उभयदेवीभ्यां साकं श्रीगोविन्दराजस्वामी




**तिरुपतौ**
**११-०५-२०१९ तः**
**११-०५-२०१९ पर्यन्तं समाचरितः**
**श्रीगोविन्दराजस्वामिनः**
**ब्रह्मोत्सवः**



लघुशेषवाहनोपरि श्रीगोविन्दराजस्वमी







हनुम-हंस-गरुडवाहनानामुपरि श्रीगोविन्दराजस्वामी



सर्वभूपालवाहनोपरि श्रीगोविन्दराजस्वामी



सिंहवाहनोपरि श्री गोविन्दराजस्वामी



कल्पवृक्षवाहनोपरि उभयदेवीभ्यां साकं श्रीगोविन्दराजस्वामी



तिरुपति पुरवीथिषु श्रीगोविन्दराजस्वामिनः रथोत्सवः



SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY
Published by Tirumala Tirupati Devasthanams
25-06-2019



श्री विखनसाचार्यस्वामिनः
उत्सवः तिरुपतिः
१४-०७-२०१९ तः
१८-०७-२०१९ पर्यन्तम्